# वररुचि शिक्षा

वररुचिशिक्षा मूलप्रारंभः

गजाननं च वरदं प्रणम्य गिरिजासुतम् ।
शिक्षामथ प्रवक्ष्यामि वेदानामादिकारणम् १
मात्रिका वत्सानुसृतिस्तथा वत्सानुसारिणी
पादोना स्यात्पाकवती पादमात्रापिपीलिका २
ह्रस्वादिर्वत्सानुसृतिरंते वत्सानुसारिणी
पाकवत्युभयोर्ह्रस्वा दीर्घाभयापिपीलिका ३
न प्लुतप्रग्रहौ चेति सन्धिकार्यं प्रयुज्यते
एकमात्रं तु तत्कालं पादाधिक्यं तथापरे ४
दिक् शब्दादभिनिहितो ब्राह्मणे तूच्चमिष्यते
मसलोपनिषेधौ च वैपरीत्यौ वदेद्बुधः ५
इकारपूर्वो विसर्गस्तु कृत्पदे परतस्थिते
अप्राप्तं प्राप्यते तत्र प्राप्तं न प्राप्यते तथा ६
छाषस्तु वदतो मात्रः द्विमात्रो वायसोपि च
शिखी त्रिमात्रिका चैव निस्तृतो नात्र संशयः ७
स्वरास्तु ब्राह्मणा ज्ञेया वर्गाणां प्रथमाश्च ये
द्वितीयाश्च तृतीयाश्च चतुर्थक्षत्रियास्तथा ८
वर्गाणामुत्तमा वैश्या अंतस्थाश्च तथैव च
अनुस्वारो विसर्गश्च शूद्रा ऊष्माण एव च ९
कथं वर्णास्तु वर्णानां ब्राह्मणक्षत्रियादयः
स्वकालात्पाद एव स्याद्ब्राह्मणानां च कथ्यते १०
तदर्धं क्षत्रियादीनां शास्त्रा दृष्ट्यानुवर्तते
केचित्पदस्तु सर्वेषां व्यञ्जनानां च कथ्यते ११
पितृमेधे सहाध्याये चोपनिषादिनारायणे तथा
न हेमेनी पूर्वो डकारश्च दुःस्पृष्टभजते ध्रुवम् १२
तत्स शब्दविशिष्टं तु यदि त्वं कथ्यते बुधैः

उत्कार्यमुत्सृजेदुत्के स्वरितत्वं भवेद्ध्रुवम्  १३
न रेफे वा हकारे वा द्विर्भावो जायते क्वचित्
न च वर्गे द्वितीये तु न चतुर्थे कदाचन  १४
तृतीयेन चतुर्थस्य प्रथमेन परस्य च
आद्यंतश्च न मध्यं च स्वाक्षरेणैव पीडयेत्  १५
अवसाने तवर्गीया वाद्यन्तौ दन्तमूलजौ
अर्धपादौ नकारस्तु संयोगे यस्सवर्गतः  १६
अवग्रहे तु द्विविधो नकारस्संप्रकीर्तितः
जिह्वाग्रं मध्यमे च स्यादेतावतौ द्विविधा मताः  १७
अनुष्टुभौ पदादौ च संयोगावग्रहेषु च
यः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः  १८
अवग्रहात्परं यत्र स्वरितस्स्यादनंतरम्
तिरो विरामं तद्विद्यादुक्तो यद्यदवग्रहः  १९
करेणुः कर्विणी चैव हरिणी हारितेति च
हंसपदेति विज्ञेयाः पंचैताः स्वरभक्तयः  २०
करेणू रहयोर्योगे कर्विणी लहकारयोः
हरिणी रशसानां च हारिता लशकारयोः  २१
या तु हंसपदा नाम सा तु रेफषकारयोः
एवं पंचविधाभक्तिरुच्यते  २२
स्वरभक्तिः प्रयुंजानस्त्रिदोषान् परिवर्जयेत्
इकारश्चाप्युकारश्च ग्रस्तदोषस्तथैव च  २३
ऋग्विरामस्वरभक्तिस्वप्रधानाः प्रकीर्तिता
ऋतस्य धूरुषदं चैव स्वतंत्राभक्तिरुच्यते  २४
स्वराद्दीर्घात्पदांतस्थात्स्वरितस्तु या भवेत्
सा तु पूर्वस्वरांगस्याद्दोषावस्तोर्हविष्मते  २५
स्वराद्ध्रस्वात्पराभक्तिं प्रचयत्पन्नयेद्बुधः

वायुभेदात्स्वरभेदाद्रूपभेदादनेकदा २६
वासश्शब्दाच्च नासिक्यं पूर्वस्स्वप्राप्यते कठे
स्वरभक्तिः स्वन्त्रा वा काठके परिकीर्तिता २७
एकश्रुतिः क्वचिद्विद्यात्क्वचिच्च विदितस्स्वरः
स्वरभक्तिस्स्वतन्त्रा वा व्यंजनस्यांगमस्तथा २८
वर्णान्यो वा स्वरान्यो वा पंच प्रंश्नेषु विद्यते
आरण्यादौ द्वयोश्चान्ते त्रिषु चैवं विधीयते २९
एकश्रुतिरवसान उदात्तस्वरितोऽपि वा
प्रकृतिर्वा संहिता वा सर्वमेव श्रुतिर्भवेत् ३०
अन्त्यात्पूर्वस्य वर्णस्य नीचत्वं कथ्यते बुधैः
क्वचित्तद्रूपमेव स्यात्क्वचिदादौ च मध्यमे ३१
अग्निश्च जातवेदाश्च सहोजा अजिरा प्रभुः
यस्मिंनस्य काले सर्वा आहुतीर्हुता भवेयुः
भक्तिं तत्र विजानीयादिकारो नात्र संशयः ३२
शकारस्य नकारस्य संयोगो यत्र वक्ष्यते
तत्स्थाने यो इकारस्य तैत्तिरीयेषु पठ्यते ३३
काठकानां तु पञ्चानां मथत्र निषदां तथा
तावद्विहिततां चैषां नान्यत्रैतत्प्रवर्तते ३४
कवर्गे प्रथमागमः काठके च यथा विधिः
लोपोकारस्थयोर्मध्ये स्वरात्पूर्वं न कंपितम् ३५
पुपूहे त्रिषु पूर्वेषु शषहेषु परेषु च
रेफ उकार एवास्ति तस्माद्भक्तिर्न विद्यते ३६
उवर्णाच्च षसैस्सार्धं रेफोकारश्च तिष्टतः
उकारश्चात्र सद्भावाद्भक्तिर्नैष्यत्यसंशयः ३७
तिस्रो वृत्तीरुपदिशन्ति वाचो विलम्बितां मध्यमां च द्रुतां च

वृत्यन्तरे कर्मविशेषमाहुर्मात्रा विशेषः परिवृत्तिमेति ३८
छिद्रं परं च तत्र स्यात्पदयोरंतरागमः
चकारस्तत्र जानीयात् काठके परिकीर्तितः ३९
ह्रस्वस्य च एकारस्य संधौ पूर्वागमस्तथा
छकारस्तत्र जानीयात्पदमध्ये तु पठ्यते ४०
अनुनासिकात्परन्तोजात्ककारो मध्यमागमः
गकारश्च ककारश्च थकारश्च यथा क्रमः ४१
स्वरात्परस्य वर्णस्य क्वचिद्द्वित्वं न कथ्यते
द्वितीयस्य चतुर्थस्य पूर्वो मध्ये तथागमः ४२
तवर्गात्तु द्वितीयस्य जिह्वाग्रं कथ्यते बुधैः
षकारस्तेन संबंधादल्पप्राण इति स्मृतः ४३
टपूर्वस्य द्वितीयस्य जिह्वाग्रं कथ्यते बुधैः
शषसंबंध एव स्यादल्पप्राण इति स्मृतः ४४
आद्यं तयोश्चवर्गाणां द्वितीयाच्च षसीषु च
तेषामल्पतरो वायुः कथ्यते नात्र संशयः ४५
तवर्गे च वक्ष्यमाणे तु पदादौ वर्तते यदि
चनापि वै च मध्यै च जिह्वाग्रं करणं स्मृतम् ४६
नीनं भागस्पर्शानां तु स तु स्पर्शैस्स योगो भवस्मिथः
पूर्वस्य संधृतिर्वक्त्रे न नु तस्येष्यते श्रुतिः ४७
शषसादीव नासिक्याः प्राप्यन्ति मंदवायुना
नेष्यते श्रुत्रिती तस्य सम्यग्धारणमेव तु ४८
तेन शब्दात्परः पृक्तः पूर्वं न प्राप्यते कठे
ऊष्मणापृक्तस्संयोगे निषेधस्तत्र नेष्यते ४९
आदेशाद्भक्तिरेव स्यात्पूर्वांगत्वं विधीयते
लकारे यस्य भक्तिस्तु तैत्तिरीये तु पठ्यते ५०
यस्य प्रयत्नकार्येषु सर्वधा यज्ञमेव तु

नान्यत्र कुरुते यत्नमोमः कंठादय स्मृतः ५१
प्रयत्नश्च पृथग्भावः कैश्चित्सर्वत्र नेष्यते
सर्वदा यत्न एव स्याद्वर्णमात्रस्वरादिषु ५२
ऋकारात्प्रथमस्यैव द्वित्वं न स्यात्कथं चन
पदस्यायनस्थानाच्च पदाध्ययनवर्जिताः ५३
तेषां विरामं षट्पादं भजते नात्र संशयः
ईच्यैः पद्यैश्च संयोगे विरामो मात्रिकस्मृतः ५४
द्विरूपो वा त्रिरूपो वा प्राप्यते वाक्यमेव तु
तेषु तेष्ववकाशेषु मात्रा मात्रैव कथ्यते ५५
न रेफे वा तकारे वा कवर्गे यत्र दृश्यते
पर्वयोर्गुणसंबंधकथ्यते नात्र संशयः ५६
मनसा हस्तशास्त्रोक्तं स्मरन्नुच्चारयेद्बुधः
तस्माद्धस्तेन निर्देशं वर्जयेद्बुद्धिमान्नरः ५७
न वायुं हमसंयोगे नासिकाभ्यां समुत्सृजेत्
न वदेदुरसानादं तथा यरलवेषु च ५८
औरस्यं पदकालेऽस्ति संहितायां न दृश्यते ५९
संहितायांस्तेन सद्भावे विभागौ नास्ति चेद्बुधः
तत्र तत्र प्रयोगो वा अत्यंतं तं वदेद्बुधः ६०
अन्यथापि यथा शास्त्रं वक्तव्यश्च यथाविधि
अनन्त्यं च भवेत्पूर्वमन्त्यश्च परतो यदि ६१
तत्र मध्ये यमस्तिष्ठन्नासिकास्थानमुच्यते
स्पर्शानां पंचमैर्योगे भवन्ति हि यमा स्मृताः ६२
अयतुल्यस्तु गळबंधाः प्रकीर्तिताः
नादस्तु श्रूयते चेद्वा विरामद्व्युत्क्रमस्तथा ६३
अनुनासिकोथ नासिक्यं जायते वर्णरूपतः
वर्गान्ताच्च षसैस्सार्धं अंतस्थैर्वापि संयुतम् ६४

दृष्ट्वा यमानि वर्तते अत्यंतं सूक्ष्ममाचरेत्
सप्तस्वराननतिक्रम्य स्वरितो वर्तते क्वचित् ६५
अल्पवायुस्तु तस्य स्यात्पादवृत्तिस्त्विति स्मृतः
मन्द्रादीनां तृतीयस्स्यान्नितांतं कथ्यते बुधैः ६६
एवं शास्त्रांतरे दृष्टे तस्मात्तीव्रं प्रवर्तते
अन्तस्थाद्युदये पूर्वं पंचमस्तु द्विरुच्यते ६७
इतरादौ परे तत्र स न चेति स्मृतो बुधैः
अवसान उदात्तस्य संधौ नीचत्वमिष्यते ६८
आरण्यादौ द्वयोश्चान्ते तथा दृष्टं तथैतत्
स्वरितोदात्तयोश्चैव स्वारपृच्छादयोस्तथा ६९
प्रचयादनुदात्तस्य तेषां कार्यं तु कथ्यते
पूर्वस्तीव्रं ततो वायुस्तीव्रमेव परस्य तु ७०
परस्य मंदवायुस्स्यात्प्रयोक्तव्यं यथा क्रमम्
हकारस्य विसर्गेण संयोगो यत्र दृश्यते ७१
प्रयत्नस्तत्र जानीयाद्यथा वर्गे तथा भवेत्
अध्याये तैत्तिरीयाणामार्षये पाठ इष्यते ७२
अनुवाकादनुवाकस्य वदेदादौ पदद्वयम्
प्रश्न्यात्प्रश्न्य च न ब्रूयाद्धेतुसंबन्धनो न चेत् ७३
अध्याये तैत्तिरीयाणां पदवाक्यांतरादिषु
गणितास्ते प्रयोक्तव्यस्तेन गच्छंति ते गतिम् ७४
प्राप्तिस्वराननतिक्रम्य मयेष्टं वर्तते स्वरः
उपनिषद्विशेषेण षष्टानां मार्ग एव तु ७५
ओष्ठ्य स्वरेषु कार्येषु प्रथमेनाहरद्वयम्
पठयोरोष्ठ्ययोश्चैव कार्यं न स्यात्कथं चन ७६
ओष्ठ्ययोस्स्वरयोर्मध्ये दृश्यते च तयोर्यदि
पृथग्भावस्तयोर्न स्यात्कालेनास्ति तयोरपि ७७

ओष्ठ्ययोस्स्वरयोर्मध्ये पकारो यत्र दृश्यते
पृथग्भावस्तयोर्न स्याद्भिन्नरूपस्वरो यदि ७८
वर्गोत्तमैस्स्वराणां तु संयोगो यत्र दृश्यते
अनुनासिकसंबंधमैकारस्य न विद्यते ७९
अनार्षे ये तु यत्कार्यं तच्च साधारणं भवेत्
विशेषस्तत्र नेष्यंते विना मंत्रादयस्मृताः ८०
अष्टा वेवावसानानि गौर्य आग्नेय एव तु
समाप्याकार्षं तत्र उदात्ते परतः पदे ८१
सूर्यश्चेति विशेषश्च अकार्षं मनसा तथा
देवपाठं पुरस्कृत्य देवसंबंधनस्तथा ८२
तेन त्यजंत्युदात्तादीन् नान्यानपि परित्यजेत्
माहिशब्दादिश्चानेन वेदेष्वग्निर्विवक्षिता ८३
तमुस्तोतारशब्दश्च दूर्वा दुःस्वप्न एव च
तमु पूर्वसकारश्च षत्वमाप्नोति संहितात् ८४
ज्योतिरायुर्विसर्गश्च वृदुर्धर्षत्वमेष्यते
ह्रस्वस्य रूपं विज्ञेयं चतुर्भिस्तथा ८५
दीर्घस्य द्विगुणं विंद्यात्त्रिगुणं तत्प्लुतस्य च
रंगवर्णप्रयोक्तव्यो न ग्रसेत्पूर्वमक्षरम् ८६
दीर्घस्वरं प्रयुंजीत पश्चान्नासिक्यमाचरेत्
हृदयादुत्थितं चंगं कांस्य ध्वनि समस्मृतम् ८७
द्विमात्रं च त्रिमात्रं च प्राप्यते सानुनासिकम्
वर्गोत्तमानां वर्णानां नादसंज्ञाः प्रकीर्तिताः ८८
नादश्चासो हकारश्च वर्णानां ते गुणास्स्मृताः
प्रणवस्पर्शसंबंधः प्रयत्नस्तत्र नेष्यते ८९
मात्रा तत्र वकारश्च प्राप्यते नात्र संशयः
आर्षे ये तद्विभागे च प्रणवो ग्रे प्रयुज्यते ९०

प्रातःकाले तृतीयांशे द्विभागे नांतरा भवेत्
ब्रह्मणः प्रणवं कुर्यादादावंते च सर्वदा ९१
स्त्रवत्यनोकृतः पूर्वं परस्ताच्च विशीर्यते
प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः ९२
वाच्मयं प्रणवं सर्वं तस्मात्प्रणवमभ्यसेत्
यथा दधि सर्पि स्यात्कंठस्थो यथा नः ९३
प्रयत्नेनोपलभ्येत तद्वत्स्वरगताश्रुतः
स्वरात्स्वरसमं क्रम्य तस्य संधिमनुल्बणम् ९४
सविच्छिंनसमं कुर्यात्सूक्ष्मच्छाया तपोपमम्
एवकारपरो पृक्तः प्रकृतेस्तत्र नेष्यते ९५
गुणं प्राप्तं विजानीयात्काठके परिकीर्तितः
एष शब्दात्परोपृक्तो निषेधस्तत्र नेष्यते ९६
प्राप्तं तत्र विजानीयाद्यथा कर्म प्रवर्तते
मंद्रादीनां तृतीयस्य नितांतं कथ्यते बुधैः ९७
एवं शास्त्रांतरे दृष्टस्तस्मात्तीव्रं प्रवर्तते
प्रग्रहस्योपसर्गस्य समासस्य तथैव च ९८
मध्य आदेश यवयोरिकारौकार आगमौ
रात्र्या मंत्र्य पित्र्यो भर्त्र्यो धिष्णयात्काठके परिकीर्ततः ९९
आपः पूर्वो ह्यनुस्वारो न क्वचिद्वेद भाषिणः
ऋत्यैष सांहितो दृष्टं तेन शब्दात्परस्समः १००
अध्याये तैत्तिरीयाणां दिवा कीर्तिं च संभवेत्
आग्रेन प्रयोक्तव्यं स्वाध्यायत्वरितो भवेत् १०१
तीव्रेण वायुना चैव स्वरितं चोच्चरेद्बुधः
नवमं वायुकर्णस्य जायते नात्र संशयः १०२
अग्र एकश्रुतिर्भाति पश्चान्नास्ति परंपरा
परं नास्ति श्रुतिश्चैव व्रतं चैव श्रुतिर्भवेत् १०३

ऊष्माणा पृक्तसंयोगे निषेधस्तत्र नेष्यते
भक्तिं तत्र विजानीयात्पूर्वांगत्वं विधीयते १०४
रेफस्तत्र द्विमात्रस्यादृकारादर्धमात्रकम्
यदार्धं च विसर्गस्य मात्राद्बुद्धिः प्रकीर्तिता १०५
अध्यापने त्रिमात्रास्स्युः अध्यापने तच्च मात्रिका
रेफपूर्वो नकारो यः पदांतो यत्र दृश्यते १०६
विशेषं तत्र जानीयाद्द्वित्वमित्यभिधीयते
मार्जालः पुत्रमास्येन पिडयेन च बाधतः १०७
एवं वर्णप्रयोगेण ब्रह्मलोके महीयते
मार्जालं पुत्रमास्येन पीडयेदंतकैर्न च १०८
वर्णावळीं न यो ब्रूयान्मार्जालस्तस्य कारणः
यथा व्याघ्रो हरेत्पुत्रं दंष्ट्राभ्यां न च पीडयेत् १०९
भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत्
द्विमात्रं तस्य जानीयात्त्रिमात्रं न कथं चन ११०
पशोर्नान्ते पूर्वशास्त्रोक्तं न वक्तव्यं कथं चन
स्वाध्यायत्वरितं चैव तस्मात्तं परिवर्णयेत् १११
अस्वरव्यंजनं नित्यं अणुमात्रं प्रयुज्यते
संसर्गाः केति बाहुळ्यान्मात्रा बुद्धिः प्रकीर्तिता ११२
स्वाहाकारश्च सर्वत्रोदात्तस्वरित एव तु
निहतोदात्त एव स्यात्सूर्योग्निश्चानुवाकयोः ११३
काठके वक्ष्यमाणा तु समं मध्ये विधीयते
लोपोकारस्तु कर्तव्यः सुवृष्टं वर्ज एवतु ११४
प्रसादो वेद एव स्याद्दीर्घमात्र इति स्मृतः
अनुस्वारस्तु विज्ञेयः वृंजनं त्वर्धमात्रकम् ११५
अंगलोपो विकारश्च वैपरीत्याद्यदा तदा
साक्षैव बलमित्यत्र विशेषश्चेन्न संशयः ११६

शीक्षा च प्रातिशाख्यं च विरुध्येतौ यदा भवेत्
प्रातिशाख्यं बलिर्य स्याद्दकारो न चेत्सदा ११७
विशेषं तं तु यद्रूपं दशसंख्यापरं यदि
विशेषामेव तद्ग्राह्यामविशेषेण इष्यते ११८
भूरादिषु वाक्यादिषु पंचवाक्यात्स्वरो न च
कटुश्च हकारपरस्स्यात्संधि न कुर्यात्सुविनृणमुपूर्वे ११९
विकार एव पूर्वोपरशस्वरौ यत्र पूर्वा ऊष्मा संज्ञे परे स्थिते
पूर्वस्वरस्य सङ्हारस्स्यात्स्वरभक्ति प्रकीर्तिता १२०
नादस्तु श्रूयते घोषाद्विरामाद्द्वित्वकस्तथा
अनासिकोऽथ नासिक्यो जायते वर्णरूपतः १२१
परस्परं तु संयोगे स्पर्शानां संभवेद्यदि
तत्पूर्वस्य श्रुतिर्नास्ति विरामव्यंजनस्य च १२२
व्यक्तिमध्यस्थनासिक्य स्वकालात्पाद इष्यते
तत्काला हि तथा व्यक्तिः प्राप्यते नात्र संशयः १२३
अखण्डपदपर इति वर्णा विषयो वर्णांशविषयोपि च
विरामविषयश्चेति त्रिविधः काल उच्यते १२४
अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्
शिष्याणामुपदेशार्थे कुर्याद्वृत्तिं विलंबिताम् १२५
क्रमविक्रमसंपन्नामद्रुतामपि लंबिताम्
नीचोच्चस्वारसंपन्नां वदेद्द्रुतवतीन्समामिति १२६
गुरुत्वं लघुता साम्य ह्रस्वदीर्घप्लुता न च
लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः १२७
स्वरितोदात्तनीचत्वं श्वासो नादोंगमेव च
एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयत १२८
नाति व्यक्तं न चाव्यक्तं एवं वर्णानुदीरयेत्
पयः पूर्णमिवामृत्वं हरन् धीरो यथा मति १२९

# इति वररुचिशिक्षा समाप्ता

Courtesy of Oriental Research Institute, University of Mysore:
"Vararuci Śikṣā," Manuscript #3730 (B 601/1) in *Descriptive Catalogue of Sanskrit Manuscripts* in the Oriental Research Institute, University of Mysore, Volume II (Vedāṅgam, etc.) 1978 (Oriental Research Institute Series 124). (Kannada script, 13 folios, Extract No. 262.)